॥ श्रीः ॥

॥ शिवाभ्यां नमः ॥

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीश्रीच-
रणानुग्रहलब्धसारस्वतपदैः यतिकुलोत्तंसश्रीमद्रामा-
नन्दतीर्थमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थ-
तत्त्वैः श्रीमदद्वैतानन्दाख्ययतिसार्वभौमैः
विरचितं

श्रीमच्छारीरकसूत्रभाष्यव्याख्यानं

# ॥ ब्रह्मविद्याभरणम् ॥

परमानन्दाविर्भावलक्षणमोक्षप्रयोजकाद्वितीयब्रह्मज्ञानपरिप-
न्थिकुमत्युद्भावितकुयुक्त्युत्सारणपूर्वकं वाचस्पत्यक-
ल्पतरुपरिमलाद्यनेकप्राचीनप्रबन्धार्थसङ्ग्राहकं
श्रीमच्चम्पकारण्यवास्तव्यश्रीमहामहोपाध्याय-
विरुदाङ्कित श्री राजुशास्त्र्य परनामक-
श्रीमत्त्यागराजचरणानुग्रहलब्धब्रह्म-
विद्यावैशद्येन श्रीगोष्ठीपुराभिजनेन

## हरिहरशास्त्रिणा

संशोधितं

कोनेरिराजपुरग्रामवास्तव्येन

## वि. साम्बशिवार्येण

कुम्भघोणस्थस्वकीय-

श्रीविद्यामुद्राक्षरशालायां
मुद्राक्षरैरङ्कयित्वा प्राकाश्यं प्रापिता
समुल्लसतितमाम् ।

—:(*):—

मूल्यं रूप्यदशकं (प्रापणव्ययः द्वादश कलाश्च)

सीत् कालश्चास्य संयमनसिध्योर्मध्ये पुण्यश्लोकरीत्या कल्यादि ४२६८ संवत्सरादि ४३०१ संवत्सरपर्यन्तं चतुस्त्रिंशदब्दाः पीठाधीश्यस्य समभूदिति सर्वतोभद्रम् । एतत् कृताश्च प्रबन्धाः— शान्तिविवरणब्रह्मविद्याभरणगुरुप्रदीपनामानः त्रय एव श्रूयन्ते येष्वयमेक एव प्रसिद्धः प्रथीयांश्च । अस्त्यत्र किंवदन्त्यपि— "आनन्दबोधार्यकृताः प्रबन्धाः परं प्रकाशं न गता बुधानां । यद्ब्रह्मविद्याभरणामृताब्धौ मग्ना न पश्यन्ति परं प्रबन्धम् ॥" इति अयं च प्रबन्धः ब्रह्मसूत्रभाष्यविवरणात्मा समग्रचतुरध्यायीभामतीनिगूढभावप्रकाशनपरश्च अद्वैतिनामत्यन्तोपकारक इति च प्रबन्धत एव भवति प्रत्यक्षं विचक्षणानाम् । अन्ये तु कतिपये कर्तारममुष्य कृतिरत्नस्य कमप्यवांचमेव नियमिनमितः प्रागब्दार्लिशत्यन्तरएव स्थितं आमनन्ति प्रमाणयन्ति च पूर्वेषां कतिपयानां वृद्धनियमिनां विसंभवाक्यान्येव । मन्यन्ते च ते भिन्नमेव तद्यत् किञ्चित् ब्रह्मविद्याभरणं नाम प्रागुदितवाक्यैरात्मबोधेन्द्रादिनिरूपणैश्च प्रतिपादितमिति । तदत्र निर्णये प्रामाणिकाः प्रपञ्चवृत्तान्तविमर्शनशीलाः पण्डिता एव शरणीकरणीया इत्यलम् । इदं च श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदाङ्कितश्रीमज्जगद्गुरुश्रीकामकोटिपीठाधीश्वरश्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीचरणकरुणालोकप्रोत्साहितैः सप्रयत्नमान्तं सुसंशोध्य प्रकटितमिति प्रमोमुदीतुतमां प्रेक्षावतां मन इति सर्वं शिवम् ॥

अस्य च मातृकाः पञ्चषाः परिशोधनार्थमार्जिताः यासु तिस्र एव समग्राः अन्यास्तु असमग्राः । तत्र क—चिह्नितं कडप्पाडिस्ट्रिक्ट प्रोयत्तूर. डि- वेंकटाचलशास्त्रिणां अन्तिकादागतमतिशुद्धं अधितालपत्रमान्ध्रपां अतिरमणीयलेखलिखितं द्वितीयतृतीयाध्यायमात्रम् । ख—चिह्नितं श्रीस्वयंप्रकाशानन्दतीर्थसंगृहीतात् गौरीमायूरपरिसरगतारयपुरस्थापितात् पुस्तकालयादाहृतं शुद्धं सुविशदहस्तलेखञ्च ग्रन्थलिप्यां तालपत्रे लिखितं समग्रम् । ग—चिह्नितं कुंभघोणपरिसरवर्तिश्रीवटारण्यस्थलस्थापितात् पुस्तकालयादानीतं अतिविशदहस्तलेखं अनुंकाकलं ग्रन्थलिप्यामसमग्रञ्च । घ— चिह्नितं सुप्रसिद्धषड्दर्शनीपारदृश्वनां महामहोपाध्यायश्रीत्यागराजमखिराजानामालयादानीतं आदिमाध्यायप्रथमपादान्तं अधितालपत्रमतिविशदग्रन्थलिप्यां लिखितमसमग्रम् । ङ—चिह्नितं अतिसमृद्धसुप्रसिद्धशेङ्गालिपुरवास्तव्यानां कर्मठकुलतिलकश्रीवैद्यनाथदीक्षितानां आश्रमादुपाहृतं द्वितीयाध्यायमात्रमधितालपत्रं ग्रन्थलिप्यां लिखितमसमग्रञ्च । च—चिह्नितं श्रीपरमहंसपरिव्राजकश्रीदक्षिणामूर्तिश्रीचरणेभ्यः वाराणसीनगरादासादितं चतुर्थाध्यायमात्रं अधिकाकलमालिखितं ग्रन्थलिप्यामसमग्रञ्च । इमाश्च सार्धमेतन्नगरनिवासिमद्धश्रीनारायणीयसदनस्थितविद्यामन्दिराख्यविद्याकोशस्थितप्राचीनान्ध्रमातृकासाहाय्येन च सर्वतस्सुसंशोधितपाठाः प्रायश ऐकरूप्यमेव पाठेषु प्रतिपन्ना इति ख—चिह्नितपुस्तकपाठरीत्यैव प्रकटितमखिलमिति विदां कुर्वन्तु विद्वांसः ॥

ॐ

## ॥ अध्यायचतुष्टयार्थनिरूपणम् ॥

| प्रतिपाद्यविषयाः | अध्यायसङ्ख्या |
|---|---|
| सर्वेषां वेदान्तवाक्यानां ब्रह्मणि समन्वयः, | १ |
| साङ्ख्ययोगकाणादादिस्मृतिभिस्साङ्ख्यादिप्रयुक्ततर्कैः श्रुत्यन्तरैश्च वेदान्तसमन्वयस्य विरोधपरिहारः, | २ |
| मोक्षसाधनानां वैराग्यत्वंतत्पदार्थशोधनब्रह्मोपासनयज्ञशमदमश्रवणमननादीनां निरूपणम्, | ३ |
| ब्रह्मसाक्षात्कारवतां पुण्यपापनिवृत्तिलक्षणमुक्तेः, म्रियमाणस्य उत्क्रान्तिप्रदर्शनस्य, सगुणब्रह्मविदः उत्तरमार्गाभिगमनस्य, निर्गुणब्रह्मविदः विदेहकैवल्यप्राप्तेः, सगुणब्रह्मविदः ब्रह्मलोकस्थितेश्च निरूपणम्, | ४ |

---

## ॥ ब्रह्मसूत्रीयषोडशपादार्थनिरूपणम् ॥

| प्रतिपाद्यविषयाः | अध्यायाङ्काः | पादाङ्काः |
|---|---|---|
| सुस्पष्टब्रह्मबोधकश्रुतिवाक्यानां समन्वयः, | १ | १ |
| उपास्यब्रह्मवाचकास्पष्टश्रुतिवाक्यानां समन्वयः, | १ | २ |
| ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिवाक्यानां समन्वयः, | १ | ३ |
| अव्यक्तादिसन्दिग्धपदमात्राणां समन्वयः, | १ | ४ |
| साङ्ख्ययोगकाणादादिस्मृतिभिः साङ्ख्यादिप्रयुक्ततर्कैश्च वेदान्तसमन्वयस्य विरोधपरिहारः, | २ | १ |
| साङ्ख्यादिमतानां दुष्टत्वनिरूपणम्, | २ | २ |
| पूर्वभागेण पञ्चमहाभूतश्रुतीनाम्, उत्तरभागेण च जीवश्रुतीनां परस्परविरोधपरिहारः, | २ | ३ |
| लिङ्गशरीरश्रुतीनां विरोधपरिहारः, | २ | ४ |
| जीवस्य परलोकगमनागमनविचारपूर्वकवैराग्यनिरूपणम्, | ३ | १ |
| पूर्वभागेण त्वंपदार्थस्य उत्तरभागेण तत्पदार्थस्य च शोधनम् | ३ | २ |

| प्रतिपाद्यविषयाः | अध्यायाङ्काः | पादाङ्काः |
|---|---|---|
| सगुणविद्यासु गुणोपसंहारस्य, निर्गुणे ब्रह्मणि अपुनरुक्तपदोपसंहारस्य च निरूपणम्, | ३ | ३ |
| निर्गुणज्ञानस्य बाहिरङ्गसाधनभूतानाम् आश्रमयज्ञादीनाम् अन्तरङ्गसाधनभूतानां शमदमश्रवणादीनां च निरूपणम्, | ३ | ४ |
| श्रवणाद्यावृत्त्या निर्गुणम्, उपासनया सगुणं वा ब्रह्म साक्षात्कृतवतो जीवतः पुण्यपापलेपविनाशलक्षणाया मुक्तेरभिधानम्, | ४ | १ |
| म्रियमाणस्य उत्क्रान्तिप्रकारनिरूपणम्, | ४ | २ |
| सगुणब्रह्मविदो मृतस्य उत्तरमार्गाभिगमनम्, | ४ | ३ |
| पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तेः, उत्तरभागेण च सगुणब्रह्मविदो ब्रह्मलोकस्थितेर्निरूपणम्, | ४ | ४ |


---

## ॥ समन्वयाध्यायाख्यप्रथमाध्यायस्य प्रथमपादे ॥


| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| १ | (जिज्ञासाधिकरणे) ब्रह्मणो विचार्यत्वम्, | १ | १ |
| | तत्र (प्रथमवर्णके) कर्तृत्वादिबन्धस्य अध्यासनिरूपणपूर्वकं ब्रह्मात्मैक्यरूपविषयस्य बन्धनिवृत्तिरूपप्रयोजनस्य च सम्भवकथनम्, | " | " |
| ९१ | (द्वितीयवर्णके) वेदान्तशास्त्रस्य पूर्वतन्त्रेणागतार्थत्वकथनम्, | " | " |
| ९१ | (तृतीयवर्णके) साधनचतुष्टयसम्पन्नस्याधिकारिणस्सम्भवकथनम्, | " | " |
| ७० | (चतुर्थवर्णके) ब्रह्मणः आपातप्रसिद्धिसम्भवेन विषयादिलाभकथनम्, | " | " |
| ७३ | (जन्माद्यधिकरणे) ब्रह्मणो लक्ष्यत्वम्, | २ | २ |
| ८८ | (शास्त्रयोनित्वाधिकरणे) ब्रह्मणो वेदकर्तृत्वम्, १ वर्णके, ब्रह्मणो वेदैकमेयता, २ वर्णके, | ३ | ३ |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ९४ | (समन्वयाधिकरणे) वेदान्तानां ब्रह्मबोधकत्वं १ वर्णके, वेदान्तानां ब्रह्मण्यवसितत्वं २ वर्णके | ४ | ४ |
| १४१ | (ईक्षत्यधिकरणे) प्रधानस्य जगत्कर्तृत्वाभावकथनम्, | ५—११ | ५ |
| १६९ | (आनन्दमयाधिकरणे) आनन्दमयस्य परमात्मत्वं १ वर्णके, ब्रह्मणः आनन्दमयजीवाधारत्वं २ वर्णके, | १२—१९ | ६ |
| १८२ | (अन्तरधिकरणे) आदित्यान्तर्गतहिरण्मयपुरुषस्येश्वरत्वम्, | २०—२१ | ७ |
| १९० | (आकाशाधिकरणे) परब्रह्मण आकाशशब्दवाच्यत्वम्, | २२ | ८ |
| १९३ | (प्राणाधिकरणे) ब्रह्मणः प्राणशब्दवाच्यत्वम्, | २३ | ९ |
| १९७ | (ज्योतिरधिकरणे) परब्रह्मणः ज्योतिश्शब्दवाच्यत्वम्, | २४—२७ | १० |
| २०७ | (इन्द्रप्राणाधिकरणे) ब्रह्मणः प्राणशब्दप्रतिपाद्यत्वम्, | २८—३१ | ११ |


## ॥ समन्वयाध्यायाख्यप्रथमाध्यायस्य द्वितीयपादे ॥


| | | | |
|---|---|---|---|
| २१९ | (सर्वत्रप्रसिद्धाधिकरणे) ब्रह्मणः मनोमयत्वादिभिर्धर्मैरुपास्यत्वम्, | १—८ | १ |
| २२८ | (अत्त्रधिकरणे) ब्रह्मणः जगदत्तृत्वम्, | ९—१० | २ |
| २३० | (गुहाधिकरणे) चेतनयोर्जीवेश्वरयोर्हृद्गुहागतत्वम्, | ११—१२ | ३ |
| २३६ | (अन्तराधिकरणे) छायाजीवदेवतात्मनो हित्वा परब्रह्मण एवोपास्यत्वम्, | १३—१७ | ४ |
| २४३ | (अन्तर्याम्यधिकरणे) प्रधानजीवेतरस्येश्वरस्यैवान्तर्यामिशब्दवाच्यत्वम्, | १८—२० | ५ |
| २४७ | (अदृश्यत्वादिगुणकाधिकरणे) प्रधानजीवौ निराकृत्येश्वरस्य भूतयोनित्वम्, | २१—२३ | ६ |
| २५३ | (वैश्वानराधिकरणे) ब्रह्मणो वैश्वानरशब्दवाच्यत्वम्, | २४—३२ | ७ |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्प-र्यन्तसङ्ख्या च | अधिकरण-सङ्ख्या |
|---|---|---|---|
| | **॥ समन्वयाध्यायाख्यप्रथमाध्यायस्य तृतीयपादे ॥** | | |
| २६३ | (द्युभ्वाद्यधिकरणे) सूत्रात्महिरण्यगर्भप्रधान-भोक्तृजीवेश्वराणां मध्ये ईश्वरस्यैव सर्वाधिष्ठानभूतत्वम्, | १—७ | १ |
| २७० | (भूमाधिकरणे) प्राणपरेशयोर्मध्ये परेशस्यैव सत्यशब्देन श्रेष्ठत्वम्, | ८—९ | २ |
| २८० | (अक्षराधिकरणे) प्रणवब्रह्मणोर्मध्ये ब्रह्मण एवाक्षरशब्दवाच्यत्वम्, | १०—१२ | ३ |
| २८४ | (ईक्षतिकर्माधिकरणे) अपरपरब्रह्मणोर्मध्ये परब्रह्मण एव त्रिमात्रेण प्रणवेन ध्येयत्वम्, | १३ | ४ |
| २८८ | (दहराधिकरणे) दहराकाशत्वेन प्रतीयमानानां वियज्जीवब्रह्मणां मध्ये ब्रह्मण एव तदाकाशशब्दवाच्यत्वम्, | १४—१८ | ५ |
| ३०२ | (उत्तराधिकरणे) अक्षिपुरुषत्वेनापाततः प्रतीयमानयोर्जीवपरेशयोः परेशस्यैव तच्छब्दवाच्यत्वम्, | १९—२१ | ६ |
| ३०९ | (अनुकृत्यधिकरणे) जगत्प्रकाशकत्वेन उपलभ्यमानयोः सूर्यादितेजःपदार्थचैतन्ययोश्चैतन्यस्यैव तत्प्रकाशकत्वम्, | २२—२३ | ७ |
| ३१३ | (प्रमिताधिकरणे) जीवात्मपरमात्मनोर्मध्ये परमात्मन एवाङ्गुष्ठमात्रपुरुषशब्देन प्रतिपादनम्, | २४—२५ | ८ |
| ३१७ | (देवताधिकरणे) देवानां निर्गुणविद्यायामधिकारनिरूपणम् , | २६—३३ | ९ |
| ३४३ | (अपशूद्राधिकरणे) शूद्राणां वेदानधिकारकथनपूर्वकः शोकाकुलत्वेन शूद्रनामभाक्त्वारिणो जानश्रुतेर्वेदविद्याधिगमः, | ३४—३८ | १० |
| ३५४ | (कम्पनाधिकरणे) प्राणत्वेनाम्नातानां वज्रवायुपरेशानां मध्ये परेशस्यैव तादृशप्राणशब्दवाच्यत्वम्, | ३९ | ११ |
| ३५७ | (ज्योतिर्दर्शनाधिकरणे) ब्रह्मणः ज्योतिश्शब्दवाच्यत्वम्, | ४० | १२ |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ३५९ | (अर्थान्तरत्वादिव्यपदेशाधिकरणे) ब्रह्मणः आकाशशब्दवाच्यत्वम्, | ४१ | १३ |
| ३६३ | (सुषुप्त्युत्क्रान्त्यधिकरणे) ब्रह्मणो विज्ञानमयशब्दवाच्यत्वम्, | ४२—४३ | १४ |


## समन्वयाध्यायाख्यप्रथमाध्यायस्य चतुर्थपादे ।


| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ३६९ | (आनुमानिकाधिकरणे) कारणावस्थापन्नस्य स्थूलशरीरस्यैवाव्यक्तशब्दवाच्यत्वम्, | १—७ | १ |
| ३८७ | (चमसाधिकरणे) श्रुतिप्रतिपन्नप्रकृतिस्मृतिसम्मतप्रधानयोर्मध्ये तादृशप्रकृतेरेवाजाशब्दवाच्यत्वम्, | ८—१० | २ |
| ३९१ | (सङ्ख्योपसङ्ग्रहाधिकरणे) प्राणचक्षुःश्रोत्रमनोऽन्नानां पञ्चपञ्चजनशब्दवाच्यत्वम्, | ११—१३ | ३ |
| ४०० | (कारणत्वाधिकरणे) ब्रह्मप्रतिपादकवेदान्तवाक्यसमन्वयानां युक्तियुक्तत्वम्, | १४—१५ | ४ |
| ४०४ | (जगद्वाचित्वाधिकरणे) प्राणजीवपरात्मनां मध्ये परात्मन एव कृत्स्नजगत्कर्तृत्वेन बालाकिना ब्रह्मत्वेनोक्तानां षोडशपुरुषाणां कर्तृत्वनिराकरणम्, | १६—१८ | ५ |
| ४१२ | (वाक्यान्वयाधिकरणे) संशयितजीवपरमात्मनोर्मध्ये परमात्मन एव श्रवणमननादिविषयत्वम्, | १९—२२ | ६ |
| ४२२ | (प्रकृत्यधिकरणे) ब्रह्मणो निमित्तोपादानोभयकारणत्वम्, | २३—२७ | ७ |
| ४३१ | (सर्वव्याख्यानाधिकरणे) परमाणुशून्यादीनां श्रुत्युक्तानामपि जगत्कारणत्वमपहाय ब्रह्मण एव प्रतिनियतजगत्कारणत्वम्, | २८ | ८ |


इति प्रथमाध्यायः ।

## अविरोधाध्यायाख्यद्वितीयाध्यायस्य प्रथमपादे।


| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
| --- | --- | --- | --- |
| ४३३ | (स्मृत्यधिकरणे) साङ्ख्यस्मृत्या वेदसङ्कोचस्यायुक्तत्वम्, | १—२ | १ |
| ४३६ | (योगप्रत्युक्त्यधिकरणे) योगस्मृत्यापि वेदसङ्कोचस्यायुक्तत्वम्, | ३ | २ |
| ४३७ | (नविलक्षणत्वाधिकरणे) वैलक्षण्याख्ययुक्तिद्वारापि वेदान्तवाक्यानामबाध्यत्वम्, | ४—११ | ३ |
| ४४३ | (शिष्टापरिग्रहाधिकरणे) काणादबौद्धादीनां स्मृतियुक्तिभ्यामपि वेदवाक्यानामबाध्यत्वम्, | १२ | ४ |
| ४४४ | (भोक्त्रापत्त्यधिकरणे) भोक्तृभोग्यभेदवतोऽपि परब्रह्मणोऽद्वैतत्वस्याबाध्यत्वम्, | १३ | ५ |
| ४४५ | (आरम्भणाधिकरणे) ब्रह्मणि भेदाभेदयोर्व्यावहारिकत्वमद्वितीयत्वस्य च तात्त्विकत्वम्, | १४—२० | ६ |
| ४५६ | (इतरव्यपदेशाधिकरणे) सर्वज्ञत्वेन जीवसंसारमिथ्यात्वं स्वनिर्लेपत्वं च पश्यतः परमेश्वरस्य न हिताहितभाक्त्वदोषः, | २१—२३ | ७ |
| ४५७ | (उपसंहारदर्शनाधिकरणे) अद्वितीयस्यापि ब्रह्मणः क्रमेण नानाकार्याणां सृष्टिसम्भावना, | २४—२५ | ८ |
| ४५८ | (कृत्स्नप्रसक्त्यधिकरणे) ईश्वरस्य उपादानरूपपरिणामिकारणत्वव्यवस्थापनम्, | २६—२९ | ९ |
| ४६० | (सर्वोपेताधिकरणे) ईश्वरस्याशरीरित्वेऽपि मायावित्वम्, | ३०—३१ | १० |
| ४६१ | (लीलाकैवल्याधिकरणे) नित्यतृप्तस्येश्वरस्यापि प्रयोजनं विनाऽशेषजगदुत्पादकत्वम्, | ३२—३३ | ११ |
| ४६२ | (वैषम्यनैर्घृण्याधिकरणे) कर्मनियन्त्रितानां जीवानां सुखदुःखनिमित्तमात्रस्य जगत्संहरतश्च वैषम्यनैर्घृण्यदोषाभावः, | ३४—३६ | १२ |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ४६४ | (सर्वधर्मोपपत्त्यधिकरणे) निर्गुणस्यापि ब्रह्मणो विवर्तरूपेण प्रकृतित्वसिद्धिः, | ३७ | १३ |

## ॥ अविरोधाध्यायाख्यद्वितीयाध्यायस्य द्वितीयपादे ॥

| | | | |
|---|---|---|---|
| ४६९ | (रचनानुपपत्त्यधिकरणे) साङ्ख्यानुमतप्रधानस्य जगद्धेतुत्वखण्डनम्, | १—१० | १ |
| ४७४ | (महद्दीर्घाधिकरणे) असद्वशोद्भवे काणाददृष्टान्तस्यास्तित्वम्, | ११ | २ |
| ४७९ | (तदभावाधिकरणे) परमाणूनां संयोगेन जगदुत्पत्तेर्युक्तिविरुद्धत्वम्, | १२—१७ | ३ |
| ४८९ | (समुदायाधिकरणे) ईश्वराद्भिन्नानां बाह्यवस्त्वस्तित्ववादिबौद्धविशेषसम्मतानां परमाणूनां शब्दस्पर्शादीनां च जगदुत्पादकत्वमतखण्डनम्, | १८—२७ | ४ |
| ५०१ | (उपलब्ध्यधिकरणे) विज्ञानवादिबौद्धसम्मतविज्ञानस्य जगत्कर्तृत्वादिखण्डनम्, | २८—३२ | ५ |
| ५०९ | (एकस्मिन्नसम्भवाधिकरणे) जीवादिसप्तपदार्थवादिनां बौद्धान्तराणां मतखण्डनम्, | ३३—३६ | ६ |
| ५१४ | (पाशुपताधिकरणे) तटस्थेश्वरवादस्यायुक्तत्वम्, | ३७—४१ | ७ |
| ५२० | (पाञ्चरात्राधिकरणे) जीवोत्पत्त्यादेरयुक्तत्वम्, | ४२—४५ | ८ |

## ॥ अविरोधाध्यायाख्यद्वितीयाध्यायस्य तृतीयपादे ॥

| | | | |
|---|---|---|---|
| ५२४ | (वियदधिकरणे) वेदान्तिमते आकाशस्यानित्यत्वकथनम्, | १—७ | १ |
| ५२९ | (मातरिश्वाधिकरणे) स्वरूपवतो ब्रह्मणो वायोरुत्पत्तिकथनम्, | ८ | २ |
| ५२९ | (असम्भवाधिकरणे) सद्रूपस्य ब्रह्मणोऽजन्यत्वं, जगज्जनकत्वं च, | ९ | ३ |
| ५३० | (तेजोऽधिकरणे) कार्यकारणयोरभेदेन वायुभूतस्य ब्रह्मणस्तेजःसृष्टिः, | १० | ४ |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
| --- | --- | --- | --- |
| १३२ | (अबधिकरणे) वेदोक्ततेजोरूपाद्ब्रह्मणो जलोत्पत्तिसिद्धिः, | ११ | ५ |
| १३२ | (पृथिव्यधिकरणे) छान्दोग्योपनिषदुक्तजलोत्पन्नान्नस्य पृथिव्यर्थकत्वम्, | १२ | ६ |
| १३३ | (तदभिध्यानाधिकरणे) पूर्वपूर्वकार्योपाधिकाद्ब्रह्मण उत्तरोत्तरकार्योत्पत्तिसिद्धिः, | १३ | ७ |
| १३५ | (विपर्ययाधिकरणे) लयकाले पृथिव्यादीनां विपरीतक्रमकथनम्, | १४ | ८ |
| १३६ | (अन्तराविज्ञानाधिकरणे) प्राणादीनां भूतेष्वन्तर्भावान्न तेषां सृष्टिक्रमभङ्गः, | १५ | ९ |
| १३७ | (चराचरव्यपाश्रयाधिकरणे) वपुषो जन्ममरणयोर्मुख्यत्वेन जीवस्यैतयोर्भाक्तत्वम्, | १६ | १० |
| १३८ | (नात्माश्रुत्यधिकरणे) जीवजननस्यौपाधिकत्वेन तस्य वस्तुतो नित्यत्वम्, | १७ | ११ |
| १३९ | (ज्ञाधिकरणे) जीवस्याचिद्रूपत्वखण्डनपूर्विका तच्चिद्रूपत्वसिद्धिः, | १८ | १२ |
| १४३ | (उत्क्रान्त्यधिकरणे) जीवस्याणुत्वखण्डनपूर्वकं तत्सर्वगत्वप्रतिपादनम्, | १९—३२ | १३ |
| १४९ | (कर्त्रधिकरणे) जीवस्याकर्तृत्वनिरसनपूर्वकं तत्कर्तृत्वप्रतिपादनम्, | ३३—३९ | १४ |
| १५१ | (तक्षाधिकरणे) जीवकर्तृत्वस्याध्यस्तत्वेनावास्तविकत्वम्, | ४० | १५ |
| १५२ | (परायत्ताधिकरणे) जीवस्येश्वरप्रवृत्तत्वेन न रागप्रवृत्तत्वम्, | ४१—४२ | १६ |
| १५३ | (अंशाधिकरणे) औपाधिककल्पनैर्जीवेशयोर्जीवानां च परस्परं व्यवहारव्यवस्था, | ४३—५३ | १७ |

## ॥ अविरोधाध्यायाख्यद्वितीयाध्यायस्य चतुर्थपादे ॥


| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| १६१ | (प्राणोत्पत्त्यधिकरणे) इन्द्रियाणामनादित्वनिराकरणपूर्वकं तेषामात्मसमुत्पन्नत्वम्, | १—४ | १ |
| १६२ | (सप्तगत्यधिकरणे) इन्द्रियाणामेकादशसङ्ख्याकत्वस्य वेदान्तसम्मतत्वम्, | ५—६ | २ |
| १६५ | (प्राणाणुत्वाधिकरणे) साङ्ख्यसम्मतेन्द्रियसर्वगत्वनिराकरणपूर्वकं तेषां परिच्छिन्नत्वकथनम्, | ७ | ३ |
| १६६ | (प्राणश्रैष्ठ्याधिकरणे) प्राणस्य अनादित्वखण्डनपूर्वकं तदुत्पत्तिसाधनम्, | ८ | ४ |
| १६६ | (वायुक्रियाधिकरणे) प्राणवायोः स्वतन्त्रताकथनम्, | ९—१२ | ५ |
| १६८ | (मुख्यप्राणाणुत्वाधिकरणे) प्राणस्य समष्टिरूपेणाधिदैविकी विभुता, आध्यात्मिकी तु तस्याल्पताऽदृश्यता चेन्द्रियवदिति, | १३ | ६ |
| १६९ | (ज्योतिराद्यधिष्ठानाधिकरणे) इन्द्रियगणस्य देवताधिष्ठानाधीनत्वकथनम्, | १४—१६ | ७ |
| १७० | (इन्द्रियाधिकरणे) विलक्षणत्वेन प्राणादिन्द्रियाणां पृथक्त्वम्, | १७—१९ | ८ |
| १७१ | (संज्ञामूर्तिक्लृप्त्यधिकरणे) सर्वजगत्सर्जने जीवस्याशक्तत्वादीशस्यैव सर्वशक्तिमत्त्वात् तस्यैव तन्निर्मातृत्वम्, | २०—२२ | ९ |


इति द्वितीयाध्यायः ।

---

## साधनाध्यायाख्यतृतीयाध्यायस्य प्रथमपादे ॥


| | | | |
|---|---|---|---|
| १७८ | (तदन्तरप्रतिपत्त्यधिकरणे) जीवस्य भाविशरीरबीजरूपसूक्ष्मभूतवेष्टितस्यैवेतोगमनम्, | १—७ | १ |
| १८८ | (कृतात्ययाधिकरणे) कर्मान्तैः सानुशयस्य जीवस्य लोकान्तरादवरोहणम्, | ८—११ | |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ५९१ | (अनिष्टादिकार्यधिकरणे) पापिनां याम्यलोकगमनम्, | १२—२१ | ३ |
| ५९४ | (तत्साभाव्यापत्त्यधिकरणे) अवरोहिणो जीवस्य वियदादिसमानत्वम्, | २२ | ४ |
| ५९६ | (नातिचिराधिकरणे) स्वर्गादवतरतः व्रीह्यादिप्रतिपत्तेः प्राक् अल्पमल्पं कालमाकाशादिभावेनावस्थानपूर्वकं वर्षधारादिभिस्सह भूसम्बन्धप्रतिपादनम्, | २३ | ५ |
| ५९७ | (अन्याधिष्ठिताधिकरणे) सस्यादौ जीवस्य न मुख्यजन्म, किंतु संश्लेषमात्रमिति, | २४—२७ | ६ |


---

## साधनाध्यायाख्यतृतीयाध्यायस्य द्वितीयपादे ॥


| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ६०९ | (सन्ध्याधिकरणे) स्वप्नसृष्टेर्मिथ्यात्वकथनम्, | १—६ | १ |
| ६१० | (तदभावाधिकरणे) नाडीपुरीतद्ब्रह्मणां समुच्चितानां सुषुप्तिस्थानत्वं, हृत्स्थब्रह्मणः एकत्वं च, | ७—८ | २ |
| ६१४ | (कर्मानुस्मृत्यधिकरणे) स्वप्नावस्थितस्यैव जीवस्य समुद्बोधः, नापरस्येति, | ९ | ३ |
| ६१६ | (मुग्धाधिकरणे) मूर्छायाः जाग्रदाद्यवस्थान्तरभिन्नत्वम्, | १० | ४ |
| ६१६ | (उभयलिङ्गाधिकरणे) ब्रह्मणः नीरूपभावस्य वेदान्तसम्मतत्वम्, | ११—२१ | ५ |
| ६२६ | (प्रकृतैतावत्त्वाधिकरणे) ब्रह्मणो निषेधातीतत्वेन सत्यत्वस्थापनम्, | २२—३० | ६ |
| ६३१ | (पराधिकरणे) ब्रह्मणः अन्यस्यावस्तुत्वव्यवस्थापनम्, | ३१—३७ | ७ |
| ६३३ | (फलाधिकरणे) कर्मफलोत्पत्तिं प्रति ईश्वरस्यैव कर्तृत्वं, नापूर्वस्येति, | ३८—४१ | ८ |

## ॥ साधनाध्यायाख्यतृतीयाध्यायस्य तृतीयपादे ॥


| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ६३७ | (सर्ववेदान्तप्रत्ययाधिकरणे) सर्ववेदान्तेषूपासनानामेकत्वं, छान्दोग्यबृहदारण्यकश्रुत्युक्तयोः पञ्चाग्निविद्योपासनयोः विध्यनुष्ठानफलसाम्येनैकत्वं च, | १—४ | १ |
| ६४५ | (उपसंहाराधिकरणे) गुणोपसंहारस्य कर्तव्यत्वम्, | ५ | २ |
| ६४६ | (अन्यथात्वाधिकरणे) छान्दोग्यकाण्वशाखयोः उद्गीथविद्याभेदकथनम्, | ६—८ | ३ |
| ६५४ | (व्याप्त्यधिकरणे) ब्रह्मदृष्टेः हेतुत्वेनाक्षरोद्गीथयोः एकत्वसम्पादनम्, | ९ | ४ |
| ६५५ | (सर्वाभेदाधिकरणे) वसिष्ठत्वादिगुणानामुपसंहर्तव्यत्वम्, | १० | ५ |
| ६५८ | (आनन्दाद्यधिकरणे) आनन्दसत्यत्वादीनां ब्रह्मगुणानां प्रतिपत्तिफलत्वेन सर्वशाखासु समानत्वात् व्यवस्थापकविध्यभावाच्च तेषामुपसंहर्तव्यत्वम्, | ११—१३ | ६ |
| ६६० | (आध्यानाधिकरणे) पुरुषज्ञानस्य संसारकारणाज्ञाननिवर्तकत्वात् पुरुषस्यैव वेद्यत्वम्, | १४—१५ | ७ |
| ६६२ | (आत्मगृहीत्यधिकरणे) ईश्वरस्यैवात्मशब्दवाच्यत्वम्, न विराज इति, | १६—१७ | ८ |
| ६६६ | (कार्याख्यानाधिकरणे) प्राणोपासनं प्रति प्राणविद्याप्राप्तयोः अनग्नतानुध्यानाचमनयोः अनग्नतानुध्यानस्यैव विधेयत्वम्, | १८ | ९ |
| ६६७ | (समानाधिकरणे) काण्वानामग्निरहस्यब्राह्मणबृहदारण्यकयोः पठितायाश्शाण्डिल्यविद्याया एकविद्यात्वम्, | १९ | १० |
| ६६८ | (सम्बन्धाधिकरणे) अहरित्यादित्यगतस्य, अहमित्यक्षिगतस्य च वेद्यपुरुषस्यैकत्वेऽपि स्थानविशेषात् तन्नामविशेषस्य युक्तत्वम्, | २०—२२ | ११ |
| ६६९ | (सम्भृत्यधिकरणे) विद्यैकत्वाभावात् सम्भृत्या- | | |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| | दीनां गुणानां शाण्डिल्यविद्यादिष्वनुपसंहार्यत्वम्, | २३ | १२ |
| ६७० | (पुरुषविद्याधिकरणे) तैत्तिरीयकताण्डिनोः पुरुषविद्यायाः पृथक्त्वम्, | २४ | १३ |
| ६७२ | (वेधाद्यधिकरणे) वेदमन्त्रप्रवर्ग्यादीनां विद्यानङ्गत्वम्, | २५ | १४ |
| ६८४ | (हान्यधिकरणे) अर्थवादत्वेन पुण्यपापयोरुपायनस्य हानावुपसंहर्तव्यत्वं (१) वर्णके, पुण्यपापविधूननस्य हानार्थकत्वमेव, न चालनार्थकत्वं (२) वर्णके, | २६ | १५ |
| ६८८ | ( साम्परायाधिकरणे ) मरणात् प्राक् उपास्ये साक्षात्कृते सुकृतदुष्कृतक्षयः, | २७—२८ | १६ |
| ६८९ | (गत्यर्थवत्त्वाधिकरणे) उपासकस्यैवार्चिरादिमार्गो, न ज्ञानिन इत्यस्य व्यवस्था, | २९—३० | १७ |
| ६९१ | (अनियमाधिकरणे) सर्वासूपासनासूत्तरमार्गविधानम्, | ३१ | १८ |
| ६९२ | (आधिकारिकाधिकरणे) ब्रह्मतत्त्वज्ञानिनां मुक्तिर्नियता, न तु पाक्षिकीत्यस्य प्रतिपादनम्, | ३२ | १९ |
| ६९३ | (अक्षरध्यधिकरणे) आत्मस्वरूपलक्षकाणां निषेधानां परस्परोपसंहर्तव्यत्वम्, | ३३ | २० |
| ६९४ | (इयदधिकरणे) 'ऋतं पिबन्तावि'ति, 'द्वा सुपर्णावि'ति च मन्त्रयोर्विद्यैकत्वम्, | ३४ | २१ |
| ६९५ | (अन्तराभूतग्रामाधिकरणे) एकशाखास्थयोरुषस्तकहोलयोः ब्राह्मणयोर्विद्यैक्यप्रतिपादनम्, | ३५—३६ | २२ |
| ६९९ | ( व्यतिहाराधिकरणे ) 'तद्योऽहंसोऽसौयोऽसौ सोऽहमि'त्यत्र व्यतिहारस्य उपासनार्थत्वेन मतेर्द्वैविध्यम्, | ३७ | २३ |
| ७०० | (सत्याद्यधिकरणे) सत्यविद्याया एकत्वप्रतिपादनम्, | ३८ | २४ |
| ७०१ | (कामाद्यधिकरणे) दहराकाशहार्दाकाशयोः गुणानाम् उपसंहर्तव्यत्वम्, | ३९ | २५ |
| ७०२ | (अलोपाधिकरणे) उपासकस्य भोजने उपस्थिते प्राणाहु | | |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| | तिलोपाभावः, | ४०—४१ | २६ |
| ७०४ | (तन्निर्धारणानियमाधिकरणे) उद्गीथकर्माङ्गभूतदेवतोपासनाया अनियतत्वम्, | ४२ | २७ |
| ७०७ | (प्रदानाधिकरणे) संवर्गविद्योक्ताधिदैववाय्वध्यात्मप्राणयोरनुचिन्तनस्य पृथक्त्वम्, | ४३ | २८ |
| ७११ | (लिङ्गभूयस्त्वाधिकरणे) मनश्चिदादीनां स्वतन्त्रत्वस्वीकारः, | ४४—५२ | २९ |
| ७१९ | (शरीरेभावाधिकरणे) भौतिकस्यात्मत्वनिराकरणपूर्वकतदन्यस्यात्मत्वप्रतिपादनम्, | ५३—५४ | ३० |
| ७२१ | (अङ्गावबद्धाधिकरणे) ऐतरेयगतोक्थोपासनायां पृथिव्यादिदृष्टेः कौषीतक्यामपि समानत्वम्, | ५५—५६ | ३१ |
| ७२३ | (क्रतुवज्ज्यायस्त्वाधिकरणे) विराड्रूपवैश्वानरस्य कृत्स्नस्यैव ध्यातव्यत्वम्, न तु व्यस्तस्येति, | ५७ | ३२ |
| ७२४ | (नानाशब्दाधिकरणे) अनुष्ठातव्यशाण्डिल्यदहरादिविद्यानां वेद्यब्रह्माभिन्नत्वेऽपि शब्दादिभेदात् भिन्नत्वम्, | ५८ | ३३ |
| ७२५ | (विकल्पाधिकरणे) आत्मनस्सगुणोपासनायाम् एकस्य द्वयोर्बहूनां च उपासनानां वैकल्पिकत्वकथनम्, | ५९ | ३४ |
| ७२६ | (यथाकामाधिकरणे) विकल्पेन समुच्चयेन वा प्रतीकोपासनाया ऐच्छिकत्वम्, | ६० | ३५ |
| ७२६ | (यथाश्रयभावाधिकरणे) विकल्पसमुच्चययोर्याथाकाम्यम्, | ६१—६६ | ३६ |


---

॥ साधनाध्यायाख्यतृतीयाध्यायस्य चतुर्थपादे ॥


| | | | |
|---|---|---|---|
| ७२९ | (पुरुषार्थाधिकरणे) आत्मज्ञानस्य स्वतन्त्रत्वं, न क्रत्वर्थत्वम्, | १—१७ | १ |
| ७३९ | (परामर्शाधिकरणे) ऊर्ध्वरेतोरूपाश्रमाणामस्तित्वव्यवस्थापनम्, लोककामिनां ब्रह्मनिष्ठानर्हत्वं च, | १८—२० | २ |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ७३८ | (स्तुतिमात्राधिकरणे) उद्गीथावयवस्य ओङ्कारस्य ध्येयत्वम्, | २१—२२ | ३ |
| ७४१ | (पारिप्लवाधिकरणे) औपनिषदाख्यानानां विद्यास्तावकत्वम्, | २३—२४ | ४ |
| ७४२ | (अग्नीन्धनाद्यधिकरणे) आत्मबोधस्य कर्मानपेक्षत्वम्, | २५ | ५ |
| ७४४ | (सर्वापेक्षाधिकरणे) विद्यायास्स्वोत्पत्तौ कर्मसापेक्षत्वम्, | २६—२७ | ६ |
| ७४६ | (सर्वान्नानुमत्यधिकरणे) आपदि सर्वान्नाभ्यनुज्ञानम्, | २८—३१ | ७ |
| ७४८ | (आश्रमकर्माधिकरणे) विद्यार्थिनामाश्रमधर्माणां च यज्ञादीनां सकृदनुष्ठानम्, | ३२—३५ | ८ |
| ७५० | (अन्तराधिकरणे) अनाश्रमिणो ज्ञानसम्भावनम्, | ३६—३९ | ९ |
| ७५२ | (तद्भूताधिकरणे) आश्रमिणामवरोहाभावनिरूपणम्, | ४० | १० |
| ७५२ | (आधिकारिकाधिकरणे) भ्रष्टोर्ध्वरेतसः प्रायश्चित्तसद्भावः, | ४१—४२ | ११ |
| ७५३ | (बहिस्तूभयथाधिकरणे) भ्रष्टोर्ध्वरेतसः प्रायश्चित्तस्य आमुष्मिकशुद्धिजनकत्वं, तादृशशुद्धिमतो व्यवहारानर्हत्वं च, | ४३ | १२ |
| ७५४ | (स्वाम्यधिकरणे) उपासनस्य ऋत्विक्कर्मत्वम्, | ४४—४६ | १३ |
| ७५७ | (सहकार्यन्तरविध्यधिकरणे) मौनस्य विधेयत्वम्, | ४७—४९ | १४ |
| ७६१ | (अनाविष्कुर्वदधिकरणे) बाल्यस्य भावशुद्धित्वम्, न वयःकामचारोभयत्वम्, | ५० | १५ |
| ७६३ | (ऐहिकाधिकरणे) इहवा जन्मान्तरे वा ज्ञानोत्पत्तिरिति ज्ञानोत्पत्तेः पाक्षिकत्वम्, | ५१ | १६ |
| ७६४ | (मुक्तिफलानियमाधिकरणे) सालोक्यादिमुक्तीनां जन्यत्वेन सातिशयत्वं, निर्वाणमुक्तेश्च निरतिशयत्वम्, | ५२ | १७ |


इति तृतीयाध्यायः ॥

## ॥ फलाध्यायाख्यचतुर्थाध्यायस्य प्रथमपादे ॥


| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ७६९ | (आवृत्त्यधिकरणे) श्रवणादीनामावर्तनीयत्वम्, | १—२ | १ |
| ७७० | (आत्माधिकरणे) ज्ञात्रा जीवेन स्वात्मतया ब्रह्मणो ग्राह्यत्वम्, | ३ | २ |
| ७७० | (प्रतीकाधिकरणे) प्रतीकेऽहंदृष्ट्यभावः, | ४ | ३ |
| ७७२ | (ब्रह्मदृष्ट्यधिकरणे) अब्रह्मणि प्रतीके ब्रह्मधियः कर्तव्यत्वम्, | ५ | ४ |
| ७७३ | (आदित्यादिमत्यधिकरणे) कर्माङ्गेष्वादित्यादिदृष्टीनां कर्तव्यत्वम्, | ६ | ५ |
| ७७६ | (आसीनाधिकरणे) उपासनायामासनस्य नियतत्वम्, | ७—१० | ६ |
| ७७७ | ( यत्रैकाग्रताधिकरणे ) ध्यानसाधनस्यैकाग्र्यस्य प्रधानत्वेन दिग्देशकालानामनियमः, | ११ | ७ |
| ७७८ | (आप्रायणाधिकरणे) उपास्तीनामामरणमावृत्तिः, | १२ | ८ |
| ७८० | (तदधिगमाधिकरणे) ज्ञानिनः पापलेपाभावः, | १३ | ९ |
| ७८२ | (इतराधिकरणे) ज्ञानिनः पुण्यलेपाभावः, | १४ | १० |
| ७८३ | (अनारब्धाधिकरणे) सञ्चितयोरिवारब्धयोः पुण्यपापयोः ज्ञानोदयसमये विनाशाभावः, | १५ | ११ |
| ७८३ | (अग्निहोत्राद्यधिकरणे) अग्निहोत्रादिनित्यकर्मणे विद्योपयोगित्वेन मोक्षप्रयोजकत्वम्, | १६—१७ | १२ |
| ७८५ | (यदेवाधिकरणे) सोपासनस्य निरुपासनस्य च नित्यकर्मणस्तारतम्येन विद्यासाधनत्वेन मोक्षप्रयोजकत्वम्, | १८ | १३ |
| ७८६ | ( भोगाधिकरणे ) अधिकारिणां प्रारब्धकर्मणः उपभोगेन क्षयानन्तरं मुक्तिसद्भावः, | १९ | १४ |


---

## फलाध्यायाख्यचतुर्थाध्यायस्य द्वितीयपादे ।


| | | | |
|---|---|---|---|
| ७८७ | (वागधिकरणे) वागादीनां मनसि वृत्तिप्रविलयो, न स्वरूपेण, | १—२ | १ |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ७८९ | (मनोऽधिकरणे) मनसः प्राणे वृत्तिद्वारा प्रविलयः, | ३ | २ |
| ७८९ | (अध्यक्षाधिकरणे) प्राणस्य जीवे लयानन्तरं पुनर्भूतेषु लयः, | ४—६ | ३ |
| ७९२ | (आसृत्युपक्रमाधिकरणे) ज्ञान्यज्ञानिनोरुत्क्रान्तेरपि साम्यम्, | ७ | ४ |
| ७९३ | (तदापीत्यधिकरणे) तेजःप्रभृतीनां परमात्मनि वृत्तिद्वारा लयः, | ८—११ | ५ |
| ७९५ | (प्रतिषेधाधिकरणे) देहादेव प्राणोत्क्रान्तेर्निषेधः, | १२—१४ | ६ |
| ७९८ | (परसंपत्त्यधिकरणे) तत्त्वज्ञानिनो वागादीनां परमात्मनि लयः, | १५ | ७ |
| ७९९ | (अविभागाधिकरणे) तत्त्वविदो वागादीनां निश्शेषेण परमात्मनि लयः, | १६ | ८ |
| ७९९ | (तदोकोऽग्राधिकरणे) उपासकस्योत्क्रान्तेर्विशेषवत्त्वम्, | १७ | ९ |
| ८०१ | (रश्म्यधिकरणे) निशायामपि मृतानां रश्मिप्राप्तिः, | १८—१९ | १० |
| ८०१ | (अयनाधिकरणे) दक्षिणायनमृतस्यापि उपासकस्य ज्ञानफलप्राप्तिः, | २०—२१ | ११ |


---

## फलाध्यायाख्यचतुर्थाध्यायस्य तृतीयपादे ।


| | | | |
|---|---|---|---|
| ८०२ | (अर्चिराद्यधिकरणे) अर्चिरादिकेनैव मार्गेण ब्रह्मलोकगमनम्, | १ | १ |
| ८०४ | (वाय्वधिकरणे) संवत्सरादित्ययोर्मध्ये देवलोकवायुलोकयोः सन्निवेशयितव्यत्वम्, | २ | २ |
| ८०५ | (तडिदधिकरणे) विद्युत उपरिष्टात् वरुणादीनां सन्निवेशेन अर्चिरादिमार्गस्य व्यवस्थितत्वम्, | ३ | ३ |
| ८०६ | (आतिवाहिकाधिकरणे) अर्चिरादीनामातिवाहिकत्वम्, | ४—६ | ४ |
| ८०७ | (बादर्यधिकरणे) उत्तरमार्गेण कार्यब्रह्मगमनम्, | ७—१४ | ५ |

| पृष्ठसङ्ख्या | प्रतिपाद्यविषयाः | सूत्रसङ्ख्या, तत्पर्यन्तसङ्ख्या च | अधिकरणसङ्ख्या |
|---|---|---|---|
| ८११ | (अप्रतीकालम्बनाधिकरणे) प्रतीकोपासकानां ब्रह्मलोकाप्रापणम्, | ९—१६ | ६ |

## फलाध्यायाख्यचतुर्थाध्यायस्य चतुर्थपादे ।

| | | | |
|---|---|---|---|
| ८१३ | (संपद्याविर्भावाधिकरणे) मुक्तिरूपस्य वस्तुनः पुरातनत्वम्, | १— ३ | १ |
| ८१४ | (अविभागाधिकरणे) मुक्तस्य ब्रह्मणोऽभिन्नत्वम्, | ४ | २ |
| ८१४ | (ब्राह्माधिकरणे) मुक्तस्वरूपभूतस्य ब्रह्मणो युगपत् सविशेषत्वनिर्विशेषत्वे, | ५— ७ | ३ |
| ८१५ | (सङ्कल्पाधिकरणे) अर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तस्योपासकस्य भोग्यवस्तूनां सृष्टौ मानससङ्कल्पस्यैव हेतुत्वम्, | ८— ९ | ४ |
| ८१६ | (बादर्यधिकरणे) एकस्यापि पुरुषस्य देहभावाभावयोरैच्छिकत्वम्, | १०—१४ | ५ |
| ८१७ | (प्रदीपाधिकरणे) सर्वेषां देहानां सात्मकत्वम्, | १५—१६ | ६ |
| ८१८ | (जगद्व्यापाराधिकरणे) ब्रह्मलोकं गतानामुपासकानां जगत्सृष्टौ स्वातन्त्र्याभावेऽपि भोगमोक्षयोस्तेषां स्वातन्त्र्यसिद्धिः, अनावृत्तिश्च, | १७—२२ | ७ |

इति चतुर्थाध्यायः ।

इति ब्रह्मसूत्राधिकरणार्थसूचिका ।

—o0[:*:]0o—

॥ श्रीः ॥

# ॥ अद्वैतमञ्जरी ॥

अथ

## ॥ ब्रह्मविद्याभरणम् ॥

वागीशाद्यास्सुमनसस्सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम् ॥

शङ्कराश्लेषविलसदानन्दामृतनिर्भराम् ।
विश्वोत्तंसितपादाब्जां ब्रह्मविद्यां विभावये ॥

वेदान्तनिकुरुम्बेण तात्पर्येण प्रकाशितः ।
स्वात्मानन्दैकरस्येन कल्याणाय शिवोऽस्तु नः ॥

स्वानन्दाम्बुधिमग्नचित्तमनिशं निर्धूतमायामलं
कारुण्यार्जवशान्तिसौरभमयं देव्या गिरां सेवितम् ।
रागानन्दमुनिं मुनीन्द्रनिकरैरासेवितं सर्वदा
चित्ते सङ्कलयामि वेदशिरसस्तत्त्वावबोधाप्तये ॥

## ॥ अथातो ब्रह्मजिज्ञासा ॥

अनेन सूत्रेण साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्म जिज्ञासितव्यमिति प्रतिपाद्यते । एतत्सूत्रावतारिकारूपेण 'युष्मदस्मत्प्रत्ययगोचरयोरित्यादिना सर्वे वेदान्ता आरम्यन्त इत्यन्तेन भाष्येण कर्तृत्वादिबन्धस्याक्षेपसमाधानाभ्यां मिथ्यात्वं प्रतिपाद्यते । कथमिदमुपपद्यते । पदविधया वा वाक्यविधया वा यत्सूत्रेणार्थस्संगृह्यते, स एव भाष्ये विशदतया प्रतिपादनीयः । बन्धमिथ्यात्वं तु सूत्रेण न कथञ्चिदपि संगृहीतं, संगृहीतमिति वदामः । सूत्रे ब्रह्मपदं विषयनिर्देशकम् । तेन च प्रत्यगभिन्नं ब्रह्मैव विवक्षितम् । यथा चैतत्तथोत्तरत्र स्पष्टं भविष्यति । न च बन्धमिथ्यात्वं विना जीवब्रह्मैक्यं सम्भवति । विरुद्धकर्तृत्वाकर्तृत्वध-

र्माक्रान्तयोरैक्यायोग्यत्वात् । कर्तृत्वमिथ्यात्वे तु न तदकर्तृत्वेन विरुध्यते । विषमसत्ताकयोर्भावाभावयोश्शुक्तौ रजतत्वतदभावयोरिव समावेशसम्भवात् । अवच्छेदकभेदेन संयोगतदभावयोरिव कर्तृत्वतदभावयोरपि समावेशोपपत्तौ मिथ्यात्वमेव किमर्थं तदुपपादनाय प्रतिपाद्यत इति तु न शङ्कनीयम् । प्रत्यगभिन्नब्रह्मप्रकरणान्तर्गतैः 'असङ्गो ह्ययं पुरुषः असङ्गो न हि सज्जते' 'कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' 'स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीवे'ति 'निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः । दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः' ॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।' इत्यादिभिश्श्रुतिस्मृतिवाक्यैर्जीवत्वावच्छेदेनापि सङ्गाभावं, तस्य चान्योपाधिकस्यात्मनि मिथ्यात्वमिति प्रतिपादयद्भिःप्रकारान्तरेण तदुपपादनस्य निराकृतत्वात् । अतः प्रत्यगभिन्नब्रह्मरूपविषयोपपादकतया सूत्रसूचितं बन्धमिथ्यात्वमिति भाष्यमपि तत्प्रतिपादकं तेन सङ्गतम् । अध्यासभाष्येण चेत्थमधिकरणं सूच्यते । 'वेदान्तमीमांसाशास्त्रमारम्भणीयं न वे'ति विषयसम्भवासम्भवाभ्यां संशये पूर्वपक्षः नारम्भणीयमिति । विरुद्धधर्माक्रान्तयोरैक्यायोगेन जीवब्रह्मैक्यं विषयो न सम्भवति । न 'चाहं कर्ताऽहं भोक्ते'ति प्रतीयमानो जीव एव विषयः । तस्य प्रत्यक्षसिद्धस्य तेनैव रूपेण विचारविषयत्वासम्भवात् । न च विभुत्वनित्यत्वादिना जीवरूपस्य सर्वज्ञत्वादिना ईश्वररूपस्य वियदादिसर्गप्रकारस्योपासनाभेदाभेदादिप्रकारस्य च प्रमाणान्तरानधिगतस्य विचारविषयत्वं मुमुक्षूणामुपपद्यते । अद्वैतमते प्रत्यगभिन्नब्रह्मज्ञानस्यैव मोक्षसाधनतया तदुपयोगितयैवान्यस्य सर्वस्य विचारणीयत्वेन तदसम्भवे इतरविचारस्य व्यर्थतापत्तेः । अथ 'अहं करोमि भुञ्जे' इत्यादिप्रत्यक्षस्य 'स्थूलोऽहं कृशोऽह'मित्यादिविसंवादिप्रत्यक्षसजातीयस्य निरस्तसमस्तदोषाशङ्कतात्पर्योपेतागमविरुद्धस्य 'उपलभ्याप्सु चेत् गन्धं केचिद्ब्रूयुरनैपुणाः । पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम् ॥' इति वचनविरुद्धस्य 'सुरभि जलं सुरभिः पवन'इति प्रत्यक्षस्य पार्थिवावयवसंसर्गेणेवान्तःकरणतादात्म्येनौपाधिकधर्मावगाहितया भ्रमत्वोपपत्तौ स्वाभाविकासङ्गत्वप्रतिपादकागमबाधितानां कर्तृत्वादीनां न ब्रह्मात्मैक्यविरोधित्वमिति विषयसम्भवेन विचारारम्भानुपपत्तिरिति चेन्न । प्रत्यक्षागमयोर्विरोधे हि प्रत्यक्षस्योपजीव्यतया तदनुसारेणागमस्यैव नयनमुचितम् । इतरथा वेदान्तार्थबोधस्यैवानुन्मेषप्रसङ्गात् । कर्तृत्वादीनामिव वर्णपदतत्प्रत्यक्षादीनामपि बाध्यत्वापत्त्या शुक्तिरजतादिवत् कार्याक्षमत्वापत्तेः ।

च तेषां तात्त्विकत्वापहारेऽपि व्यावहारिकत्वं नापह्नियते । तावन्मात्रेण च कार्यक्षमत्वमुपपन्नमिति नोपजीव्यविरोधः । उपजीव्यस्य व्यावहारिकत्वस्यानुपमर्दात् उपमर्दितस्य च तात्त्विकत्वस्यानुपजीव्यत्वादिति वाच्यम् । पदार्थेषु तात्त्विकत्वव्यावहारिकत्वविभागस्य श्रौतबाधनिर्धारणात् प्रागसिद्धेः । तन्निर्धारणे हि सति बाधितानां पारमार्थिकत्वानुपपत्त्या प्रातिभासिकत्वेऽर्थक्रियाकारित्वानुपपत्त्या च शुक्तिरजतवैलक्षण्येन व्यावहारिकत्वं नाम धर्मान्तरमर्थक्रियाप्रयोजकं स्वीकर्तव्यम् । तथा च प्राप्तमितरेतराश्रयत्वम् । बाधे सति व्यावहारिकत्वार्थक्रियाकारित्वयोः प्रयोज्यप्रयोजकत्वम् । तत्त्वे चोपजीव्यविरोधपरिहारेण बाध इति । न चोपक्रमोपसंहारैकरूप्यादिलिङ्गैः तात्पर्यस्य निष्प्रपञ्चप्रत्यगभिन्नब्रह्मविषयत्वनिर्धारणेन तन्निर्वाहार्थं प्रत्यक्षस्यातत्त्वावेदकत्वसिद्धौ उक्तगत्या व्यावहारिकत्वं कल्प्यत इति साम्प्रतम् । उपजीव्यप्रमाणविरुद्धार्थे तात्पर्यकल्पनस्यैवानुन्मेषात् । अर्थान्तरतात्पर्यकत्वे उपक्रमादिसहितवाक्यस्वारस्यभङ्गापत्तिरिति चेत्, इष्टत्वात् । तत्रापि प्रत्यक्षस्वारस्यभङ्ग आपन्नः । गृह्यमाणं ज्ञानं स्वतःप्रामाण्याभ्युपगमात् प्रमाणत्वेनैव गृह्यते । तथा च प्रथमोपस्थितप्रामाण्यबाधोऽपि । न च चरमोपस्थितोपजीवकस्वारस्यानुसारेण प्रथमोपस्थितोपजीव्यस्वारस्यबाधो न्याय्यः । अपि तु आगमस्वारस्यबाध एव । उपजीवकगतत्वाच्चरमोपस्थितत्वाच्च । अत एव 'आदित्यो यूपः यजमानः प्रस्तर'इत्यत्र स्वारसिकार्थस्य प्रत्यक्षबाधेन तेजस्वित्वक्रतुनिर्वर्तकत्वगुणमादाय सामानाधिकरण्यमिति स्वीक्रियते । स्तावकवाक्येषु तथा स्वीकारेऽप्यज्ञातार्थज्ञापकेषु न प्रत्यक्षानुसार इति चेन्न । 'सोमेन यजेत'क्ष्णलं श्रपयेत्' इत्यत्र प्रत्यक्षविरोधपरिहाराय मत्वर्थलक्षणोष्णीकरणपर्यन्तत्वयोस्स्वीकारात् भवद्भिरपि तत्त्वमस्यादौ भागत्यागलक्षणायास्तदर्थमेव स्वीकाराच्च । अपि च प्रत्यक्षप्रामाण्यज्ञानं निरवकाशम् । श्रुतिस्तु लाक्षणिकार्थेऽपि सावकाशा । अतः 'सावकाशनिरवकाशयोर्निरवकाशं बलीय इति न्यायेनापि प्रत्यक्षप्रामाण्यज्ञानमेव बलीयः । न च व्यावहारिकप्रामाण्ये सावकाशम् । एतत्परिभाषाया अद्वैतिपरिकल्पितायाः वस्तुव्यवस्थापकत्वासम्भवात् । ननु, 'स्थूलोऽहं कृशोहं मनुष्योऽहमन्धोहं बधिरोऽहं मूकोऽह'मिति शरीरेन्द्रियधर्माणां भासमानानामात्मनि तत्तद्धर्म्यध्यासपूर्वकत्वं वक्तव्यम् । अतो विसंवादिस्थूलोऽहमित्यादिप्रत्यक्षजातीयस्य करोमीत्यादेरप्यन्तःकरणतादात्म्याध्यासपूर्वकं तद्धर्मावगाहित्वमेवोचितम् । एवं च सम्भाविताप्रामाण्येन कथं तद्विपरीतायाश्श्रुतेरन्यथानयनम् । किं च

'सुरभि जल'मिति प्रत्यक्षस्यैवागमेन तद्बाध एवोचितः । उपजीव्यत्वप्रथमोपस्थितिनिरवकाशत्वानामसम्भावितप्रामाण्ययोस्सन्निपात एव प्राबल्यप्रयोजकत्वम् । 'आदित्यो यूप' इत्यादौ चान्यथानयने गत्यन्तरमेवानुसरणीयमिति चेन्न । स्थूलोऽहमित्येव रूपेण शरीरात्माभेदावगाहिज्ञानस्यैवासम्प्रतिपत्तेः आत्मशरीरयोरभेदज्ञानस्य तद्भेदाग्रहजन्यत्वेन तद्भेदग्रहे सत्यसम्भवात् आत्मशरीरयोर्भेदग्रहः प्रसिद्ध एव मम शरीरमित्यभिज्ञारूपः । प्रत्यभिज्ञयापि तद्भेदो गृह्यते । 'य एवाहं बाल्ये पितरावन्वभूवं स एव स्थाविरे प्रणप्तॄननुभवा' मीति । न च शरीरमेवात्र प्रत्यभिज्ञायत इति वाच्यम् । प्रत्यभिज्ञाया अवस्थाद्वयानुयायिवस्तुविषयत्वात् । शरीरयोश्च परिमाणभेदेन भिन्नतयानुयायित्वासम्भवात् अवयवोपचयापचयाभ्यां स्थौल्यकार्श्यादिरूपः परिमाणभेदो वाच्यः । अवयवोपचये आगतैरवयवैः पूर्वसिद्धावयविनिवेशायोगैस्तत्सहायेनावयव्यन्तरमारभ्यते । अपचये तु अवयवविश्लेषेणासमवायिकारणसंयोगनाशात् पूर्वावयविनि नष्टे अवशिष्टैः खण्डोऽवयव्यारभ्यत इति शरीरयोर्भेदेन प्रत्यभिज्ञाविषयत्वासम्भवः । अतः प्रत्यभिज्ञाबलात् अनुयाय्यात्मा स्वीकर्तव्यः । शरीरं च नानुयायि । अतः प्रत्यभिज्ञाबलादपि तद्भेदोऽवगतः । स्वप्ने च देवशरीरमात्मानमनुभूय जाग्रति मनुष्यशरीरं पश्यन्नपि प्रत्यभिजानाति 'स्वप्ने य एवाहं देवशरीरमात्मानमन्वभूवं, स एवाहं मनुष्यशरीरमात्मानमनुभवामीति । तत्र च देहयोर्भेदः स्पष्टमनुभूयते । न च तावतात्मनोऽवस्थाद्वये ऐक्यं शरीरयोर्भेद इत्येतावत् सिध्यति तत्रापि परिमाणभेदात् द्रव्यभेद आनुमानिकः । स्वप्नजाग्रच्छरीरयोस्तु भेदः प्रत्यक्षः । ताभ्यामात्मनो भेदस्त्वानुमानिक एव । येषु व्यावर्तमानेषु यदनुवर्तते, तत्तेभ्यो भिन्नम् । यथा कुसुमेभ्यः सूत्रम् । तथाचायं तस्मात्तथेति आनुमानिकभेदग्रहश्च नापरोक्षभ्रमविरोधीति वाच्यम् । भेदकसाक्षात्कारस्य भेदसाक्षात्कारनियतत्वं शुक्तित्वसाक्षात्कारेण रजतभेदसाक्षात्करात् तावत् स्वीकर्तव्यम् । प्रकृते द्वाभ्यां भेदकस्यैकत्वस्यात्मनि साक्षात्कारात् भेदसाक्षात्कारोऽप्यवश्यंभावी । एवं बाह्यान्तःकरणाध्यासोऽपि न सम्भवति । तत्रापि 'मम चक्षुः, मम श्रोत्रं, मम मन' इति भेदग्रहस्य सत्त्वात् । कथं च बहुत्वेनावधृतानां देहेन्द्रियान्तःकरणानां प्रत्यभिज्ञावधृतैकत्वे आत्मन्यध्यासः । बहुत्वैकत्वलक्षणवैलक्षण्यग्रहस्याभेदभ्रमपरिपन्थित्वात् । तथा च 'मनुष्योऽह'मित्याद्यभेदग्रहो न सम्भवति । येन तदृष्टान्तेन करोमीत्यादेरप्रामाण्यशङ्काकलङ्कितया श्रुतितो दौर्बल्यं शंसयेत । तत्सिद्धमुपजीव्यप्रत्यक्षस्वारस्यानुसारेण श्रुतिस्वारस्यभङ्ग इति । न चैवं 'सुरभि

जलमि'त्यादिप्रत्यक्षस्याप्यागमेन बाधो न स्यादिति शंक्यम् । जले हि सौरभाश्रयचन्दनादिसम्पर्कः, पवने च पुष्पवाटिकातो निर्गत एव तथा प्रत्यय इति तत्रापि सौरभाश्रयपुष्पावयवसम्पर्कस्सम्प्रतिपन्नः । तत्राकुशलानां सौरभासंसर्गाग्रहसम्भवात् जलादौ तदारोपसम्भवतीति युक्तं स्मृतेस्तत्र विवेचकत्वम् । न चैवं कर्तृत्वाद्याश्रयभूतं किंचिद्द्रव्यं संप्रतिपन्नम् । येन तदुपाधिकः कर्तृत्वादिप्रत्ययस्स्यादात्मनि भ्रमरूपः । ननु मनुष्योऽहमित्यादिप्रत्ययाभावे कथं सामानाधिकरण्यव्यवहारश्शब्दाभिलापरूपः । मनुष्योऽहमिति व्यवहर्तव्यज्ञानाभावे व्यवहारानुपपत्तेः । न च नायं व्यवहारस्सामानाधिकरण्यावगाही । किं तु शरीरसम्बन्धावगाही । अर्श आद्यच्प्रत्ययसम्भवात् अन्धादिशब्दानां विकलाङ्गवाचिनां गणे पाठात् । मनुष्यादिशब्दानां तु आकृतिगणत्वात् सङ्ग्रहो भविष्यति । अचश्च—'तदस्यास्त्यस्मिन्नि ति मतुबि'तिविहितमत्वर्थीयतया सम्बन्धवाचकत्वमुपपन्नमिति वाच्यम् । 'गच्छामि कृश्यामि कुणिरह' मित्यादिव्यवहाराणां तथा निर्वाहासम्भवात् । तत्राध्यासस्यागत्या आश्रयणे 'अन्धोऽह' मित्यपि तथैवास्तु । न च तथा सति विकलाङ्गवाचिनां गणपाठो व्यर्थस्स्यादिति वाच्यम् । स्वरार्थतया पाठोपपत्तेः । वर्णवाचिनां हि नीलादिशब्दानां मतुब्लोपेनैव सम्बन्धबोधोपपत्तौ गणपाठस्य स्वर एव प्रयोजनमित्यङ्गीकरणीयम् । तत्तुल्यमन्धादिशब्देष्वपि । न च शुक्लैः प्रासादैर्धवले नगरे 'शुक्लं नगर' मिति प्रयोगश्शुक्लगुणयुक्तप्रासादवैशिष्ट्यबोधक इति सम्बन्धद्वयबोधनाय प्रत्ययद्वयमावश्यकमिति वाच्यम् । तत्र सन्निवेशविशेषविशिष्टा गृहा एव नगरमित्यभ्युपगमे साक्षादेव सम्बन्धश्शुक्लत्वस्येति न प्रत्ययद्वयापेक्षा । गृहाधिकरणस्य स्थलस्यैव नगरत्वे तु परम्परासम्बन्धस्यैकेनैव बोधनात् । न प्रत्ययद्वयापेक्षा । अन्यथा 'अश्वेतनगरगपुष्पयज्ञ' मित्यादौ का गतिः । अतस्सामानाधिकरण्यव्यवहारोपपादकतया देहेन्द्रियाद्यध्यासः स्वीकर्तव्य इति चेन्न । भेदग्रहेणाध्यासानुपपत्तौ व्यवहारस्य गौणत्वोपपत्तेः । गृहीतभेदयोर्हि सिंहमाणवकयोः 'सिंहो माणवक' इति व्यवहारो गौण इति सर्वसम्प्रतिपन्नम् । अध्यासवादिनापि हि कायव्यूहवतां योगिनामपरोक्षीकृताद्वैतात्मतत्त्वानां जीवन्मुक्तानां च सः व्यवहारो गौणोऽवश्यमङ्गीकर्तव्यः । तस्मात् मनुष्योऽहमिति दृष्टान्तेनाप्रामाण्यशङ्कया अनुन्मेषान्निर्णीतप्रामाण्येनोपजीव्यतया प्रबलेन प्रत्यक्षेणागमस्याद्वैतात्मावबोधकत्वविरोधादर्थान्तरपरत्वमेव स्वीकर्तव्यमिति विषयाभावः । विषयाभावे च प्रयोजनमपि न सम्भवति । विषयप्रमा हि साक्षात्प्रयोजनम् । न चासम्भावित

विषये प्रमा सम्भवति । परमप्रयोजनं च प्रत्यगभिन्नब्रह्मविषयाज्ञाननिवृत्तिपूर्वं
जीवस्य नित्यसिद्धब्रह्मात्मनावस्थानम् । न च तदपि सम्भवति । प्रमाणाभा
ब्रह्मात्मताया एवासम्भवात् । श्रुतेरन्यपरत्वस्य दर्शितत्वात् प्रमाणान्तरस्य च
सम्भवात् । अतो विषयप्रयोजनयोरभावेन शास्त्रं नारम्भणीयमित्यभिप्रेत्य विष
यप्रयोजननिर्णयोपयोगिनमध्यासमाक्षिप्य परिहरति—'युष्मदित्यादिना नैसर्गिक
कोऽयं लोकव्यवहार' इत्यन्तेन भगवान् भाष्यकारः । अत्र युष्मत्प्रत्ययगोचर
त्वं युष्मच्छब्दोल्लेखिप्रत्ययगोचरत्वं विषयस्य शरीरादेः । अस्मत्प्रत्ययगोचरत्व
मस्मच्छब्दोल्लेखिप्रत्ययगोचरत्वं विषयिण आत्मनः । अनेन च विरुद्धप्रवृत्ति
निमित्तकशब्दप्रतिपाद्यत्वेन भेदग्रहो दर्शितः । यद्यपि इदंशब्दोल्लेखिप्रत्यय
गोचरत्वमेव जडस्य वक्तुमुचितम् । सम्बोध्यचेतनस्यैव हि युष्मच्छब्दोल्लेखि
प्रत्ययगोचरत्वं, तथापि इदंशब्दोल्लेखिप्रत्ययगोचर एव स्वभिन्नत्वगुणयोगादत्य
न्तविरोधख्यापनाय तथोपचरितम् । इदमस्मच्छब्दयोर्हि 'इमे वयं अयमहमस्मी'
लौकिकवैदिकसामानाधिकरण्यव्यवहारप्राचुर्यात्तथाविरोधो न स्फुरति । युष्मदस्म
च्छब्दयोस्तु प्रचुरसामानाधिकरण्यप्रयोगाभावात् स्फुरति विरोधः । अनेन
'ममेदं शरीरमि' तिप्रतीतिर्दर्शिता । तमःप्रकाशवत् विरुद्धस्वभावयोः तथाव
योरिति यावत् । भेदाग्रहाभावसिद्ध्यर्थं विरुद्धस्वभावग्रहणमेव प्रतिपादनीयमि
तथा व्याख्यातम् । विरुद्धस्वभावत्वं च परस्परानात्मत्वम् । इतरेतरभावानुप
त्तौ सिद्धायां तादात्म्यप्रतीत्यनुपपत्तौ सिद्धायाम् । एवं च यत् सिद्धान्ति
च्यते शरीरात्माभेदभ्रमवत् कर्त्रात्माभेदभ्रमोऽपि सम्भवतीति, तत् निरस्तम् । '
मेदं शरीरमि'त्यादि भेदग्रहे जाग्रति शरीरात्मनोरभेदभ्रम एव न सम्भवति । तद्ध
र्माणामपि सुतरामितरेतरभावानुपपत्तिः इतरेतरभावो धर्माणां व्यत्यासः, तदध्यासा
नुपपत्तिःधर्म्यभेदाध्यासाभावादेव धर्माध्यासाभावे अर्थसिद्धे पुनः प्रतिपादनं श
विशेषनिराकरणार्थम् । ननु, मास्तु धर्म्यभेदाध्यासः । तदभावेऽपि जपाकुसुम
दाध्यासरहिते स्फटिके जपाकुसुमारुणिम्न इव शरीरे आत्मधर्मस्य चैतन्य
देरध्यासः किं न स्यात् । न च तदभेदाध्यासस्तत्प्रतिबिम्बो वा तदगृही
भेदस्तद्धर्माध्यासप्रयोजकः । स्फटिके चास्ति जपाकुसुमप्रतिबिम्बः स्फटिक
गृहीतभेदः । शरीरेचात्माभेदाध्यासनिराकरणादगृहीतभेदश्शरीरे आत्मप्रतिबि
वक्तव्यः । सोऽपि न सम्भवति । नीरूपस्य आत्मनः प्रतिबिम्बासम्भवात्
रूपवत एव प्रतिबिम्ब इति हि नियम इति वाच्यम् । नीरूपस्यापि गगन
जले प्रतिबिम्बदर्शनेन नियमभङ्गात् । अथ जले न गगनप्रतिबिम्बः । अपि

आलोकप्रतिबिम्ब एव । गगनप्रतिबिम्ब इति भ्रममात्रम् । अतो न नियमभङ्गः । ननु, नायं नियमस्साधुः । प्रतीत्यनुसारी हि नियमः कल्पनीयः । न तत्त्वप्रयोजकनियमानुसारेण गगनप्रतिबिम्बप्रतीतेरप्रामाण्यं कल्पयितुं युक्तम् । अन्यथा रूपवत एव चाक्षुषत्वमिति स्वगतरूपचाक्षुषविषयत्वमेव द्रव्यस्येति च नियमं परिकल्प्य 'विशालं नभः' नीलं नभः 'नीलं सलिलमि'त्यादिप्रतीतीनामप्यन्यविषयत्वपरिकल्पनापत्तेः । यदि च रूपवदेव चाक्षुषमिति स्वगतरूपचाक्षुषविषयत्वमेव द्रव्यस्येति न नियमः । किं तु स्वगतेनान्यगतेनारोपितेन वा रूपेण सम्बद्धस्य चाक्षुषत्वम् । तादृशरूपचाक्षुषविषयत्वमेव द्रव्यस्येत्युच्येत, तदा रूपवत एव प्रतिबिम्ब इत्यपि नियमो मास्तु । यथाकथञ्चिद्रूपोपहितस्य प्रतिबिम्ब इत्येवास्तु । तथा चाकाशस्याप्यालोकरूपोपधानेनारोपितरूपोपधानेन च प्रतिबिम्बसम्भवे किमिति तत्प्रतीतेर्भ्रमत्वं कल्प्यते । एवमात्मनोऽपि शरीररूपोपधानेन प्रतिबिम्बोऽस्तु । दृश्यते हि दर्पणादिगतनैल्याद्युपधानेनापि मुखादिप्रतिबिम्ब इति चेन्न । येनापि हि गगनप्रतिबिम्ब इष्यते, तेनाप्यालोकप्रतिबिम्बस्तावदभ्युपगन्तव्यः । अन्यथा वैशाल्यप्रतीत्यनुपपत्तेः । यत्र रूपं प्रतिभासते, तत्रैव परिमाणभानमिति नियमात् । एवं चालोकप्रतिबिम्बे भासमानस्य वैशाल्यस्य गगनप्रतिबिम्बगततया भानमिति भ्रमोऽपि स्वीकार्यः । तद्वरमालोकस्यैव प्रतिबिम्बोऽस्तु । तत्रैव गगनप्रतिबिम्बत्वभ्रममात्रम् । तलमलिनत्वादिकं चालोकप्रतिबिम्ब एवाध्यस्यताम् । कल्पनालाघवात् । एवं च रूपवत एव प्रतिबिम्ब इति न नियमभङ्गः । रूपोपहितस्य प्रतिबिम्ब इति कल्पने त्वनन्तरसम्प्रतिपन्न आकाशप्रतिबिम्ब एव मूलम् । स तु न सम्भवति । गौरवपराहतत्वादित्युक्तम् । बहिस्त्वाकाशस्य सर्वसम्प्रतिपन्नत्वात् 'विशालं नभः नीलं नभः' इति प्रतीतेर्यथार्थत्वेन गौरवमिति तदुपपत्तये रूपोपहितस्य चाक्षुषत्वमित्येव स्वीक्रियते । तथा च नीरूपस्यात्मनो न प्रतिबिम्बसम्भवति । एवमपि गगनप्रतिबिम्बत्वभ्रमाश्रयः यथा जले आलोकोऽस्ति । तस्मिंश्च गगनधर्मस्य तलमलिनत्वस्यारोपे स एव बाह्यगगनसदृशः तलमलिनत्वादिविशिष्टगगनत्वप्रकारकप्रत्ययविषयो भवति । तादृशालोकेन कूपस्य भेदाग्रहशालिनां च कूपे तलमलिनत्वादिकमित्यपि भ्रमो भवति । एवं शरीरे आत्मप्रतिबिम्बत्वभ्रमाश्रयः कश्चिदस्ति चेत् तत्रात्मधर्मस्य चैतन्यादेरध्याससम्भवेत् । तस्य चैतनत्वेनागम्यमानस्य शरीरात् भेदाग्रहे सति तत्रापि तद्धर्माध्याससम्भवेत् । न तु शरीरे आत्मप्रतिबिम्बत्वभ्रमाश्रयः कश्चिदस्ति । एवं चाभेदाध्यासाभावेऽपि जपाकुसुमारुणिम्न इवात्मधर्मस्य चैतन्यादेरध्यासोऽस्त्विति क-

थमुच्यत इति चेन्न । रूपोपधानेन प्रतिबिम्ब इति पक्षे जलान्तर्गततया अप
गगनप्रतिबिम्बः कल्पनीय इति बाह्य एवाकाशे प्रतिहतैर्नायनरश्मिभिः संसृष्टे
लान्तर्गतत्वमारोप्यत इतिवदन्तं प्रतिवक्तुं न शक्यते । बाह्यगगने चालोकरूप
पहिते सर्वसम्प्रतिपन्नतया भवताप्यभ्युपगता वैशाल्यप्रतीतिर्भ्रम इत्यपि वक्तुं
शक्यत इति कथं गौरवम् । प्रत्युत भवत एव गौरवम् । तलमलिनत्वस्य गग
नगततया सर्वप्रतीतिसिद्धस्य प्रतिबिम्बप्रत्यये आलोकगततया आरोप्यस्य स्वी
कारात् । यन्मते चापूर्व एव प्रतिबिम्बो जले उत्पद्यते । तत्रापि न वैशाल्यम
गगनप्रतिबिम्बगततया भानं भ्रमः । आलोकरूपोपहितस्यैव प्रतिबिम्बाभ्युपगमा
त् । न च प्रतिबिम्बद्वयाभ्युपगमात् गौरवम् । येनापि ह्यालोकप्रतिबिम्ब एव ग
गनप्रतिबिम्ब इति स्वीक्रियते, तेनाप्यालोकप्रतिबिम्बाधिष्ठानो गगनप्रतिबिम्ब उ
त्पद्यत इति वक्तव्यम् । अनिर्वचनीयवादाभ्युपगमात् । तदस्तु जलाधिष्ठान ए
किमनया कुसृष्ट्या । अपि च गगनप्रतिबिम्बाभ्युपगमे बिम्बसदृशः प्रति
इति तलमलिनताप्रत्यये नापूर्वं किञ्चित् कल्पनीयम् । तदनभ्युपगमे त्वालोक
तिबिम्बे अक्लृप्तस्तदध्यासः कल्पनीय इति विपरीतं गौरवम् । तस्मान्नीरू
स्याप्याकाशस्य रूपोपधानेनेवात्मनोऽपि रूपोपधानेन प्रतिबिम्बे न कदाचि
नुपपत्तिः । तथा च स्फटिके जपाकुसुमारुणिम्न इव धर्म्यध्यासाभावेऽपि ध
आत्मधर्मस्य चैतन्यादेरध्यासः किं न स्यादिति शङ्का । तन्निराकरणं च त
र्माणामपीत्यनेनेत्थं विवक्षितम् । वेदान्तिनो हि 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभ
मञ्जस्यादेवमि'ति सूत्रे वक्ष्यमाणरीत्यान्तःकरणाद्यैक्याध्यासमापन्नस्य तद्धर्मानुवि
धायित्वमेव तत्र प्रतिबिम्बितत्वमिति गतम् । न तु मुख्यं सूर्यप्रतिबिम्बादिव
तदुपपत्तिश्च तत्रैव स्फुटीभविष्यति । अन्तःकरणाद्यैक्याध्यासश्च न सम्भवती
त्युक्तम् । अतो न तद्धर्माध्यासः । धर्म्यभेदाध्यासाभावेऽपि नीलं सलिलमिति
ले नैल्याध्यासो दृश्यते । एवं प्रकृते किं न स्यादिति शङ्कायां—युष्म
ति । अन्यत्र यथा कथञ्चिदस्तु नाम । परस्परधर्म्यभेदाध्यासपूर्वक एव
डयोः परस्परधर्माध्यास इति वदता सिद्धान्तिना तथा शङ्कितुमेव न शक्य
भावः । एवं देहात्माध्यासरूपं दृष्टान्तं निरस्य तेन सम्भावनीयं बुद्ध्या
रैक्याध्यासमपि निरस्यति । इत्यलोऽस्मत्प्रत्ययगोचर इति । अत्र विष
ब्दोऽन्तःकरणप्रतिपादकः । तद्विपर्ययेणेति । उत्तरत्राध्यास इत्यनेन
ध्यते । एकत्रात्माधिष्ठानं, अन्यत्र जडोऽधिष्ठानमित्यध्यासयोर्वैपरीत्य
मिथ्येतिभवितुं युक्तमिति । न सम्भवतीति यावत् । तथापि

परिहारस्यायमाशयः—श्रुतितदन्यप्रमाणविरोधे हि श्रुतेरेव प्राबल्यं वैदिकैरभ्युपगन्तव्यमित्युत्सर्गः । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् । इति स्मृतेः । न चेदं वचनं आगमैकसमधिगम्यस्वर्गयागादिसाध्यसाधनभावादौ तत्प्राबल्यप्रतिपादनपरम् । न तु प्रत्यक्षसाधारणात्मविषय इति वाच्यम् । तथासङ्कोचकल्पने प्रमाणाभावात् एकविषयानेकविरुद्धप्रमाणसन्निपाते निर्णयोपयोगितया प्राबल्यप्रतिपादनेनापेक्षितार्थसमर्पकत्वे सम्भवति विरुद्धप्रमाणान्तराप्रसक्त्याप्यर्थत्वापादकस्यागमैकसमधिगम्यविषयकत्वस्य कल्पयितुमनुचितत्वाच्च । उपजीव्यप्राबल्यन्यायश्च न प्रकृते सम्भवति । सामान्यन्यायस्य 'उपजीव्योपजीवकयोरेवोपदेशानुपदेशत्वे विपरीतं बलाबलमि'ति विशेषन्यायेन बाधात् । न चाप्रयोजकत्वम् । अनुपदेशस्य दुष्टत्वसम्भवात् । स च दोषः क्वचिदप्रामाण्यशङ्काकलङ्कितत्वम् । क्वचिद्विलम्बितप्रवृत्त्यादिकम् । तद्यथा कुण्डपायिनामयने श्रुतस्य 'यो होता सोऽध्वर्युरि'ति वाक्यस्य विरुद्धार्थकयोर्होत्रध्वर्युशब्दयोस्सामानाधिकरण्यनिर्वाहार्थं प्रथमश्रुतहोतृशब्दानुसारेणाध्वर्युशब्देन लक्षणयोपस्थापिते अध्वर्युकार्ये होतृविधायकत्वे स्थिते यूपपरिव्याणे करणस्य 'परिवीरसी'ति मन्त्रस्यान्यत्राध्वर्युप्रयोज्यस्यापि अत्र वचनानुसारेण होत्रा प्रयोगः प्राप्नोति । अतिदेशानुसारेण च होतृकार्यान्तर्गते 'युवा सुवासा' इति वर्तमानतानुवादिमन्त्रे होता प्राप्नोति । न चोभावपि मन्त्रौ होत्रा प्रयोक्तुं शक्यौ । परिव्याणसङ्कल्पमारभ्य तत्समाप्तिपर्यन्तः कृत्स्नोऽपि वर्तमानकाल इति तावन्तं कालं वर्तमानतानुवादी मन्त्रः प्रयोक्तव्यः । परिव्याणाव्यवहितपूर्वक्षणे करणमन्त्रः समापनीय इत्येककाले समावेशात् । तत्रान्यतरबाधे वर्तमानतानुवादिमन्त्रबाध एवाश्रितः । तत्र होतुरतिदेशः तत्कार्यस्य च प्रत्यक्षेण 'यो होता सोऽध्वर्युरित्यनेनोपजीव्यः । प्राप्तोभयानुवादेन सम्बन्धमात्रविधानात् । होतृप्राप्त्यर्थं होतृकार्यमप्युपजीव्यम् । पदार्थानां कार्यमुखेनैव विकृतिषु प्राप्तेस्स्वीकारात् । न चात्र सावकाशनिरवकाशन्यायः । 'वचनस्य 'परिवी रसी'तिमन्त्रातिरिक्तेऽप्याध्वर्यवे सावकाशत्वात् । अत उपजीव्यस्यापि विलम्बितप्रवृत्तिकतया शीघ्रप्रवृत्तिकेन उपदेशेन बाध इत्येव स्वीकर्तव्यम् । एवं प्रकृतेऽपि सम्भाविताप्रामाण्यस्य प्रत्यक्षादेरुपदेशेन तद्विपरीतेन बाधो भविष्यति । एवमुपजीव्योपजीवकयोरेव तात्पर्यलिङ्गसहितस्य उपजीवकस्य तद्रहितादुपजीव्यात् प्राबल्यमभ्युपगन्तव्यम् । अद्वैतविषयकोपक्रमाणामिदमेव प्रयोजनम् । यत् प्रमाणान्तरानुसारेण 'तत्त्वमस्या'दिवाक्यस्यार्थान्तरशङ्कानिराकरणम् । न च तथा प्रत्यक्षादेस्तत्त्वावेदकत्वमेव स्वीकर्तव्यमित्यत्र किञ्चिन्निर्व-

च्यते । विकारः परिणामः अन्यथाभाव इत्यनर्थान्तरम् । ब्रह्म च 'अस्थूलमनण्वि'-त्यादिश्रुतिवाक्यैः 'कूटस्थमचलं ध्रुव'मित्यादिस्मृतिवचनैश्च सर्वविकारवर्जितमवगम्यते । अतः कथं परिणामादित्युच्यते । केचिदाहुः— सृष्टिवाक्यपर्यालोचनया आत्मन उपादानत्वमवगम्यते । उपादानत्वं चापृथक्सिद्ध्या विकाराश्रयत्वम् । निर्विकारत्वं च श्रुतिष्वाम्नायते । अत उभयविरोधपरिहाराय सृष्टिवाक्येष्वात्मादिपदानां मायाऽव्यक्ताजादिपदैः प्रतिपादिता या दैवी शक्तिः, तद्विशिष्टेश्वरपरत्वमुपेयते । तथा च विकारित्वाख्यमुपादानत्वमव्यक्तरूपविशेषणांश एव पर्यवसति । विशेष्यभूतस्यात्मनो निर्विकारत्वप्रतिपादनेन तदंशे चाधादिति । तैस्तु वाचोयुक्त्यन्तरेण सेश्वरसाङ्ख्यपक्ष एव व्यवस्थापितो भवति । प्रकृत्यंशस्यैवोपादानत्वोपगमात् । अपि च सृष्ट्यादिवाक्येष्वात्मब्रह्मादिपदानां प्रकृत्या विशिष्टलक्षणापि न न्याय्या । कथं च 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति विशुद्धात्मानं प्रस्तुत्याम्नाते 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादौ प्रकृतविशिष्टात्मलक्षणालक्षितेऽपि विशिष्टात्मनि पञ्चम्यर्थस्योपादानत्वस्य विशेष्यांशे स्वरसतोऽन्वितस्य विशेषणांशपर्यवसानकल्पनमपि न स्वरसम् । तस्मान्नेयं कल्पना श्रुतिस्वारस्यानुरोधिनी । अन्ये तु यथा प्रकृतेरुपादानत्वम्, एवमात्मनोऽप्युपादानत्वम् । उभयोपादानत्वस्य श्रुतिसिद्धत्वात् । परं तु आत्मनो विकाराश्रयत्वं परम्परया, प्रकृतिः साक्षादेव विकारिणी । आत्मा तु विक्रियमाणप्रकृत्याश्रयतया विकारी । तथा च श्रुतिः—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'ति । न च तथासति परमात्मन उपादानत्वं न स्यादिति वाच्यम् । न ह्यपृथक्सिद्ध्या विकाराश्रयत्वम् उपादानत्वमित्यत्र साक्षात्सम्बन्धेन विकाराश्रयत्वं विवक्षितम् । येन परम्परया विकाराश्रयस्योपादानत्वं न स्यात् । गौरवेण साक्षात्त्वस्यानिवेशात् । निर्विकारश्रुतिस्तु साक्षाद्विकारित्वं निषेधति । अतो नोभयवचनविरोध इति । एवं हि 'आत्मन आकाशः सम्भूत' इत्यादिवचनानां स्वारस्यं परित्यक्तमेव स्यात् । उत्सर्गतः साक्षात् सम्बन्ध एव हि तत्र प्रतीयते । न चौत्सर्गिकस्य तस्य 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'ति वचनानुसारेण मायाद्वारकत्वमास्थेयमिति वाच्यम् । न हि तत्रोपादानत्वं मायाद्वारकमित्यवगम्यते, अपि तु प्रकृतिमायाश्रयत्वमात्रम् । ततश्च प्रतिज्ञाद्यनुरोधादुपादानत्वं 'मायां त्वि'ति श्रुत्यनुरोधात् प्रकृत्याश्रयत्वं चेत्यस्तु, न तूपादानत्वमपि परम्परयाश्रयणीयम् । न च निर्विकारत्वश्रुत्यनुसारेण उत्सर्गतः प्राप्तं साक्षात्त्वं परित्यज्यत इति वाच्यम् । श्रुतिद्वयस्वारस्यानुरोधेन विकारमिथ्यात्वकल्पनोपपत्तेः । अपि च श्रुतिप्रतिपादितयोर्विकारित्वनिर्विकारत्वयोः श्रुत्याद्यनुसारेणैव विरोधपरिहारसम्भवे न श्रुत्यस्वारस्यापादकं किञ्चित् स्वयं कल्पनीयम् । श्रुतिश्च विकारमिथ्यात्वं प्रतिपा-

दयति वाचारम्भणमित्याद्या, एवं पुराणमपि—'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम् ॥' इत्यादिना । ततश्च विकारस्य मिथ्यात्वात् न स्वाभाविकनिर्विकारत्वविरोधितेत्येव श्रुतिस्मृत्यनुयायिभिः परिहार आस्थेयः । पूर्वमात्मकृतेरिति हेतुसाधकतया 'परिणामादि' ति सूत्रांशो व्याख्यातः । इदानीमात्मन उपादानतायामेव तं हेतुं व्याचष्टे—परिणामादिति वा पृथक्सूत्रमिति । सच्च त्यच्चाभवदिति । ननूपादानेनोपादेयस्य तादात्म्यमुत्पत्त्यैव । इह तु सृष्ट्यनन्तरमनुप्रविष्टस्य तादात्म्यमाम्नायते । 'इदं सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' इति श्रुतेः । अतः कथमनया श्रुत्योपादानत्वं प्रतिपादनीयमिति चेत्, उच्यते —उपक्रमे हि 'सोऽकामयत बहु स्यां प्रजायेयेती'ति स्रज्यात्मना बहुभावः परमात्मनोऽवगतः । स एवेदं सर्वमसृजत । यदिदं किं चे'त्यादिना स्पष्टं प्रतिपाद्यत इति वक्तव्यम् । तथा चेदं सर्वमसृजतेत्यनेनापञ्चीकृतभूतात्मना बहुभाव उक्तः । 'तदेवानुप्राविश'दित्यत्र तु पञ्चीकृतमहाभूतात्मना । न हि व्यापिनः परमेश्वरस्य तत्तद्वस्तुतादात्म्यं विना अन्यः प्रवेशः सम्भाव्यते । 'सच्च त्यच्चाभव'दिति तु भौतिकात्मना बहुभावपरम् । एवं च मुख्ययैव वृत्त्या सामानाधिकरण्यसम्भवेन 'सर्वं समाप्नोषि ततोऽसि सर्व' इति स्मृतिमनुसृत्यैव गौणं सामानाधिकरण्यमाश्रयणीयम् । प्रत्युत स्मृतावेव समित्युपसर्गश्रवणात् सम्यक्तादात्म्येन सर्वमाप्नोषीत्येव व्याख्यातुमुचितम् ॥२६॥

## योनिश्च हि गीयते ॥ २७ ॥

स्त्रीयोनेरपीपि । न च तावता योन्येकदेशस्य शोणितस्यैव गर्भं प्रत्युपादानता भवेत्, न त्ववयविन्या योनेरिति वाच्यम् । यथा हि तन्त्वेकदेशनिष्पन्नस्य खण्डपटस्य तन्तूपादानत्वम्, एवं योन्येकदेशनिष्पन्नस्यापि गर्भस्य योन्युपादानत्वोपपत्तेः । योनिष्ट इति । हे इन्द्र ते निषदे अवस्थानाय योनिः स्थानमकारीत्यर्थः । यथोर्णनाभिरिति । गृह्णते गृह्णाति ग्रसतीत्यर्थः । ननूर्णनाभिश्चेतनः तन्तूनां सृष्टौ ग्रासे च निमित्तमेव । उपादानं तु तच्छरीरैकदेशभूता लालेव । अतः कथमूर्णनाभिदृष्टान्तानुसारेण योनिशब्दस्योपादानपरतेति चेत्, न । लोके ह्यूर्णनाभितच्छरीरयोर्न भेदग्रहोऽस्ति । अतो लोकदृष्टिमाश्रित्य शरीरस्योपादानता चेतनेन तादात्म्यापन्नस्यैवेत्यूर्णनाभिरपि भवति लोकदृष्ट्योपादानम् । अत एव विवेकिदृष्ट्या दृष्टान्तान्तरमुपात्तं—'यथा पृथिव्यामोषधयस्सम्भवन्ती'ति । पूर्वपक्ष्याशयमनूद्य दूषयति—यत्पुनरुक्तमिति । यथा हि घटादिषु कार्येषु सर्वकर्ता एकः कश्चिदाश्रीयते अप्रसिद्धोऽपि लौकिकानां प्रमाणबलात्, एवं लोके कर्तुरुपादानस्य च भेदः प्रसिद्धोऽस्तु ना-

म, तथापि तां प्रसिद्धिं शास्त्रेण बाधित्वा उपादानाभिन्न एव वियदादिषु कर्तोपेय- त इति भावः ॥ २७ ॥

## एतेन सर्वे व्याख्याताव्याख्याताः ॥ २८ ॥

सूत्रैरेवेति । यद्यपि काणादादिपक्षोऽपि सूत्रैरेव एतेन सर्वे इत्यादिभिर्निराक्रियते, तथापि साङ्ख्यनिराकरणार्थं या युक्तय उक्ताः, प्रायशस्ता एव तन्निराकरणाय कैश्चित् सूत्रैरतिदिश्यन्ते । साङ्ख्यं प्रति तु बहूनि युक्त्युपदेशरूपाणि सूत्राणि प्रणीयन्ते निराकरणायेत्यस्ति विशेषः । प्रधानमल्लनिबर्हणन्यायेनेति । मल्लो बाहुयुद्धविशारदः, तेषु प्रधानमल्लनिबर्हणं जयकामेन प्रथमं कर्तव्यम् । तस्मिन् निगृहीते हि दुर्बलानामितरेषां मल्लानां जयस्सुकर इति न्यायः । किञ्चिल्लिङ्गमापातेन मन्दमतीन्प्रतिभायादिति । न्यग्रोधफलमत आहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इति आसामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति यं वै सोम्यैतमणिमानं न निभालयसे एतस्यैव सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्य'मिति । अत्र दृष्टान्ते 'न किञ्चन भगव' इति असत्त्वोपक्षेपपूर्वकं न्यग्रोधोत्पत्तेः प्रतिपादनाद्दार्ष्टान्तिकेऽपि असदेव कारणं प्रतिभाति । अणिम्न एवं महान्न्यग्रोधस्तिष्ठतीत्यणूनां दृष्टान्ते कारणताप्रतिपादनाद्दार्ष्टान्तिकेऽपि स य एषोऽणिमेत्युक्तत्वादणुकारणतावादः प्रतिभाति । अणिमेति भावप्रत्ययार्थाविवक्षा सिद्धान्तिनोऽपि समाना । न च तथासति ब्रह्मकारणताप्रतिपादकवाक्यविरोधः । कल्पभेदेनोभयकारणत्वस्याविरोधादिति । तेषामपि प्रधानवादवदशब्दत्वाच्छब्दविरोधित्वाच्चेति । अयं हि सन्दर्भः एकविज्ञानेन सर्वविज्ञानोपक्रमात् मध्ये च सदेवेत्यादिपरामर्शात् स आत्मा तत्त्वमसीत्युपसंहाराच्च अध्यारोपापवादाभ्यां निष्प्रपञ्चप्रत्यगभिन्नब्रह्मबोधनपरः । अतः प्रधानार्थानुसारेण दृष्टान्तवाक्यस्यार्थो ग्राह्य इति न किञ्चन भगव इत्यणिम्न इति च दुर्विभाव्यसूक्ष्मतापरम् । एवंहि सत्युपक्रमाद्यविरोधो भवति । अन्यथा तद्विरोधः स्यात् । एवमन्यत्रापि वाक्येषु विद्यमाना अण्वादिशब्दाः परमात्मनि सूक्ष्मताभिप्राया द्रष्टव्याः । पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयतीति । तद्द्योतकता त्वभ्यासस्य वैदिकसम्प्रदायागता । तथा च श्रुतिषु अध्यायादिसमाप्तौ पदाभ्यासो दृश्यते—'तद्धास्य

विजज्ञाविति विजज्ञाविति' 'तं स्कन्द इत्याचक्षते तं स्कन्द इत्याचक्षते' 'ओङ्कार एवेदं सर्वमोङ्कार एवेदं सर्व'मिति ॥ २८ ॥

इति

श्रीपरमहंसपरिव्राजकाचार्यश्रीमद्भूमानन्दसरस्वतीश्रीचरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादिगुणरत्नखचितयातिकुलोत्तंसश्रीमद्रामानन्दतीर्थमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थस्वर्धुनीप्रवाहनिमज्जनसुहितस्य श्रीमदद्वैतानन्दस्य कृतौ शारीरकभाष्यव्याख्यायां प्रथमस्याध्यायस्य

चतुर्थः पादः ।

॥ समाप्तश्चाध्यायः ॥

हरिः ॐम् ।

श्रीः

---

